शा धर्गो स्पचमपरा स्वस्मात्तनम पर शत्रुर्येपाते यथाअवर्गो पूर्वस्यावली अनेनपश्चिमायाद्वारनिवासोनविधेय एवकवर्गादीनामपिवाधव्यादाद्वारनिवा
सोनविधेय २ अथेष्टनक्षत्राधाभ्याइए भूम्यारिस्ताराणामिद्रकजेद्रवशापूर्षहिनाह एकोनितेति सेष्टायेतिच तभराशीकूटादिद फलोरिवानितयेद्वितिव
सिद्वोक्तेः यदेवनक्षभव्यवहारनाम्नाविवाहोक्तमेचयकविधिनाशुभदस्यात् तदेवसष्ठभकल्प्यम् यस्मध्वजाद्यष्टायेविषमआयईप्सित स्यात्सएवेष्टा
य कल्प्य ताभ्याविस्तारायामज्ञान यथानीलकरस्यानूराधानक्षत्रतस्यरोहिण्यासहमेलापक सभवतीतीष्टभरोहिणीकल्पितम् तत्सरव्या ४ एको
नितेएर्सै ३ अनेनद्विंतिथ्यो १५२हता ४५६ इष्टाय सिहःकल्पित तृतीय रूपोनितद्द्वीय २ अनेनेदुनागा ८१ गुणिता १६२ युता ६१८ घनैर्भ १७ युता
६३५ भूपाश्विभि २१६ र्विभक्त २०२ इदमेवक्षेत्रफलग्रहस्यइष्टायनक्षत्रभवम् अथकल्पितदैर्घ्य २१ अनेनभक्तेलब्धोविस्तार ७ अथकल्पितविस्तृति ७

एकोनितेष्टर्क्षहताद्वितिथ्योरूपोनितेष्टायहतेदुनागै युक्ताधनैश्चापिसुताविभक्ताभूपाश्विभि शेषमितोहिपिडम् ३

भक्तोलब्धदैर्घ्य २१ अत्रगोपीराजाचार्यकृतम्सुमम् विष्णुत्र्येकायगोपु ११ हतिभ्रुजिफलगोपिराजोपशेषात्लायवेष्टाश्हग्ध्या २१६ युतमहि ८ हुताद्
कु २ भकृत्या २१ स्त्वविश्वे १३ बाणा ५ सिद्धा २४ इ १६ नागो ८ दु २७ तिथ्रीत १९ गिरिशा ११ आ ३ कृर्नी २२ द्र १४ तु ६ तला २५ त्यस्था १७ क ९ क्ष्मा १ नरव २०
ना १२ र्णव ४ विकृति २३ दिना १५ न्धा ७ कृति २६ भेदु १८ काष्ठा १० गोपीराज कथयतिविष्णु गोभूहतियुजिसतिअहिहताद्कुभकृत्यारव्यविश्वाद्य फ
लआहविगत एकोयस्मात्सएक सवासौआयश्चव्येकाय ध्वजादिरिष्टाय सनगोभुवश्चएषापरस्परगुणानाव्येकायगो भूहतिश्च भत्त्व्येकायगो
भूहतिभेतयोर्युकव्येकायगोभूहतिभयुक्तास्मिन्सतिभशेषात् भी २७ भैकेसानियक्षेपम् तस्माद्विष्णुनामानंशिष्य अहिहताअष्टगुणितादकुद्वौ भक्ष्

त्यारव्या एकविंशति. विश्वेत्रयोदशेत्यादियोगगृहक्षेत्रफलम् सायंइष्टायसहितम् आहवदतिअत्रोदाहरणम् इष्टायः ३ व्येकः २ गोभू १९ हति ३८ इष्टर्क्षो
रोहिणी तत्सरव्यया ४ युतम् ४२ अस्माद्भैः २७ शेषं १५ एततसंख्यया फलम् २५ अहि ८ हतम् २०० सायं २०३ इदंस्वेष्टायनक्षत्रभवंक्षेत्रफलं पूर्वससमे
व महद्गृहप्रमाणमाह वेतिवा अथवा इष्टायसहितंजातं यत्क्षेत्रफलम् अष्टिदृग्र्येषुयुतं अष्टिभ्रदृशश्च अष्टिदृश. अष्टिदाग्भिः षोडशाधिकद्विशत्या २१६ हतो-
गुणितोयइष्टः एकद्वित्र्याद्यंक तेनयुक्तंकार्यमित्यर्थ. अत्रैवाचार्यप्रपौत्रगोपिराजस्यापिपद्यम् इष्टर्क्षाढ्यमुनीदवोद्विरहि ८ हृच्छेषान्यजेत्त्वायतोनोन्वेच्छुत्थ्य
तिशोध्यमष्टसहितान्छेषंत्रिहृत्सायकम् चेत्स्यादिष्टयुतंयथातुतदशेषंस्यादथोरामहृल्लाताभ्राद्विकरान्विता फलम्भीष्टायर्क्षजंजायतेसिद्धैर्भक्तः स्या
त्करादिष्टदीर्घमानार्थंनैकादितिघ्नान् भ भोगान्तावद्यावत्साक्षिपेदिष्टभानिविस्तार. स्यादिष्टदैर्घ्येणभक्ते ३ अथोत्तरार्द्धेन ध्वजाद्यायानाह आयैर्वणपरत्वे-

**स्वेष्टायनक्षत्रभवोथदैर्घ्यंत्हृत्स्याद्विस्तृतिर्विस्तृतिहृच्चदीर्घता आयाध्वजोधूमहरिश्वगोखरेभध्वांक्षकाः पिंड इहाष्टशेषिते ४ ध्वजादिकाः**
**सर्वदिशिध्वजेमुखेकार्यंहरौपूर्वयमोत्तरेतथा प्राच्यांवृषेप्राग्यमयोर्गजेथवापश्चादुदक्पूर्वयमेद्विजादितः ५**

नच द्वारनिवेशनमुपजात्याह आ-
याइतिध्वजादिका इति पिंडे क्षेत्रफले अष्टशेषितेयदवशिष्टंतत्संमिता ध्वजादिकाआया स्यु. ध्वजधूमोप्रसिद्धोहरि. सिंह. श्वाकुक्कुरःगौर्वृषः खरोगर्दभः इभोह
स्तीध्वांक्ष. कालः स्वार्थेक ४ सर्वदिशीति ध्वजारव्येआयेसर्वदिशिदक्चतुष्टयेपिगृहद्वारंकार्यम् नपश्चिमांदिशि तथावृषारव्येप्राच्यांदिश्येवद्वारंकार्यम् नान्यदिक्षु
गजारव्येआयेप्राग्यमयो पूर्वदक्षिणदिश्योर्गृहद्वारंकार्यम् आयानांप्रयोजनमाहविश्वकर्मा वृषंसिंहंगजंचैवखुंटेकर्पटकाटयोः द्विपः पुनः प्रयोक्तव्योवापीकूपस
रःस्वच मृगेंद्रमासनेदद्याच्छयनेषुगजंपुनः वृषंभोजनपात्रेषुछत्रादिषुपुनर्ध्वजम् अग्निवेश्मसुसर्वेषुगृहेवन्ह्युपजीविनाम् धूमंनियोजयेत्केचित्स्थानंम्लेच्छा

द्विजातिषु सर्वेष्वपि गृहेशस्तोभास्म्यापिकुटीषु च वृषसिंहध्वजश्चापि प्रासादपुरवेश्मनि गजाये वाश्वनाये वा गजानां सदनं शुभम् अश्वालयध्वजाये
खरेटायेवृषभेपि वा अमत्रशस्त्रस्थाणादृषायेवाध्वजेपि वा पादुकोपानहीकार्ये सिंहाख्येप्यथवाध्वजे उक्तानामप्यनुक्तानां सर्वेषां च ध्वजः शुभ इति अथ
ब्राह्मणादिवर्णपरत्वेन द्वारनिवेशनमाह अथेति द्विजादितो ब्राह्मणादिवर्णविभागेन पश्चादुदक्पूर्वयमेष च ब्राह्मणस्य पश्चान्मुखम् क्षत्रियस्योदङ्मुख
म् वैश्यस्य पूर्वमुखम् शूद्रस्य दक्षिणामुखमित्यर्थः श्रीपतिः ध्वजे प्रतीचीमुखमग्रजानामुदङ्मुखं भूमिभृतां च सिंहे विशो वृषे प्राग्वदनं गजे तु शूद्रस्य याम्या
यनमामनन्तीति ५ अथ गृहारम्भे विशिष्यकालनिषेधमुपजातयाह गृहेशेति अर्के हीन्य शुक्रे विबले निर्बले अस्ते अस्तगते नीचे नीचराशिगते सति क्रमात्

गृहेशतल्पीसुखवित्तनाशोऽर्केन्दुजीव्यशुक्रे विबलेऽस्तनीचे कर्तुः स्थितिर्नो विधुवास्तुनोर्भे पुरःस्थिते पृष्ठगते खवानि स्यात् ६ हेशतल्पीसु

खवित्तनाशो भवति यथा सूर्ये निर्बले नीचस्थिते गृहेशस्य नाशः इन्दौ चन्द्रे निर्बले अस्तमिते नीचगते वा गृहेशस्य स्त्रीनाशः गुरौ ईज्ये निर्बले ऽस्तगे नीचगते वा गृ
हेशस्य सुखनाशः शुक्रे निर्बले ऽस्तगे नीचगते वा वित्तनाशः वसिष्ठस्तु नीचे शत्रुगते जीवे शुक्रे चन्द्रे ऽथवा रवौ निर्मितसदनं शम्वदातिनि सत्वमाप्नुयादिति
अस्तदोषोऽत्र न ग्राह्य प्रातिदैवासिको बुधैः नास्ति दोषः सदा चन्द्रेन मैत्रऽस्य नीचमस्त इति कर्तुरिति मन्नक्षत्रे दिनचन्द्रस्तद्विधुभम् यद्गृहस्य विस्तारायामव
शादुत्पन्न भं तद्गृहभं तस्मिन्पुरःस्थिते सति कर्तुर्गृहनिर्माणकर्तुस्तद्गृहे स्थितिर्निवासो न स्यात् पृष्ठगते वा विधुवास्तुनोर्भे सति खवानि खननं चोरकृतापद्धर
तद्वशात्सर्वस्वहानिः स्यादित्यर्थः पुरःपृष्ठस्थितत्वं च दिग्द्वारभक्रमेण यथा गृहद्वारं यस्यां दिशि विधास्तिस्तस्यां दिशि नक्षत्रे च गृहारम्भो न कार्यः वामदक्षिणनक्ष
त्रेषु गृहारम्भः सुखेन कार्यः तदुक्तं ब्रह्मशंभुना एतायलब्धचक्रक्षेत्र यत्नः सर्वेन सद्मा शलाकासप्तकेदेपकृत्तिकादिक्रमेण च वामदक्षिणभागेन त्वप्रशस्तशांति

कारकम् अग्रपृष्टनदातव्यंयदीच्छेच्छ्रेयआत्मन. ऋक्षचंद्रस्यवास्तोश्चअग्रपृष्ठेनशस्यतइति अयमाशय. कृत्तिकादिसप्तनक्षत्रेषुअनुराधादिसप्तसुवा ग्रहनक्षत्रेचंद्रनक्षत्रेचसतिपूर्वद्वारंपश्चिमद्वारंवानकार्यम् तत्रचंद्र. पृष्ठास्थितो ऽग्रास्थितोवाभवति एवंमघादिसप्तसु धनिष्ठादिसप्तसु वाग्रहनक्षत्रेचंद्रनक्ष त्रेवासतिदक्षिणद्वारमुत्तरद्वारंवानकार्यमित्यर्थः ६ इदानींव्ययकथनपुरःसरफलमशकज्ञानंउपजात्याह भमिति प्रागुक्तदिशाकल्पितंयद्गृहभंतत्रना गैरष्टभिस्तष्टंअवशिष्टंव्ययईरित यथारोहिणीभं ४ अयमेवव्ययः असौव्ययः ध्रुवादिनामाक्षरयुक् ध्रुवादिनामान्यग्रेवक्ष्यति यत्यानिदिक्षुनामा निदिक्षुद्वाराणिचिकीर्षितानितदनुरोधेनयदागतंध्रुवादिनामतदक्षरसंख्ययायुक्तः तत. सपिंड. प्रागानीतपिंडाद्युक्तः गुणोत्त्रिभिस्तष्टो भक्तावसिष्टः एकादि

भन्नागतष्टंव्ययईरितोसौध्रुवादिनामाक्षरयुक्सपिंडः तष्टोगुणेरिंद्रकृतांतभूपात्यंशाभवेयुर्नशुभं ऽतकोत्र ७ दिक्षुपूर्वादितः शालाध्रुवाभूद्वौकृतागजा. शालाध्रुवांकसंयोगः सैकोवेश्मध्रुवादिकम् ८ तृशेषेणइंद्रयमराजसंज्ञकास्त्रयो ऽशा. स्युः अत्रगृहारंभे ऽतकोय मारव्यो ऽशकोनशुभ अर्थादिंद्रराजानौशुभफलदौ ७ अथशालाध्रुवाद्यानयनमनुष्टुभाह दिक्ष्विति प्राच्यांद्वारंचिकीर्षितेशालाध्रुवांकएकः दक्षिणस्यांद्वौ पश्चिमायांकृताश्चत्वार उत्तरस्यांगजाअष्टौ अर्थादिकूपरत्वेन यावंतिद्वाराणि एकंद्वेत्रीणिचत्वारिचानिकीर्षितानितावतांशालाध्रुवांकानांसंयोगः सैकः एक युतः सन् ध्रुवादिकम्वेश्मगृहंस्यात् यथा पूर्वस्यांपश्चिमायांद्वारेअभीष्टेशालाध्रुवौ १। ४ अनयोर्योगः ५ सैकः ६ गृहंजातंकांतारव्यम् एवंपूर्वदक्षिणोत्तरदि क्षुशालाध्रुवाणाम् १।२।८ सयोग ११ सैकः १२ धनदाख्यंग्रहम् दिक्चतुष्टयेविजयाख्यंगृहंषोडशमिति ८ अथध्रुवादीनांनामाक्षरसंख्यायथाचक्रेछंदसाह तिथ्यर्केति दिक्षुपूर्वादितइत्यादिनायत् ध्रुवादिवेश्मसमागतशालाध्रुवांकसंयोगः सैकोवेश्मेत्युक्तदिशासंख्यामवधारयेत् साचेत्संख्यापंचदशीद्वादशी

भरनीणाद्दशीनामीश्कादशीनतुदशीवास्यानदागृहनामाक्षरत्रयात्मकस्यात् १५ १२ ८ १६ ९ ११ १४ अत्रत्रीण्येवाक्षराणिसैषसंख्या प्रथमाद्वित
यानतुर्थीसप्तमीपष्ठीदशमीतृतीयात्रयोदशीवास्यान नदागृहनामद्वोअक्षरद्वयात्मकस्यात् सासंख्यासप्तमीस्यात् तदालब्धधमत्तुरक्षरगृहनाम
१ अथध्वजादिभुजादिनामाक्षरसंख्यात्तानवास्ययेनेरजाततथापिनन्यध्यकानिकमानिकान्यकानीत्यसंदशफलसूचनार्थषोडशगृहाणांनामानि अथ
गीतिन्द्रसाह ध्रुवधान्येति अनापागीविलक्षणवा आर्यापूर्वोर्द्धयदिगुरुणेकेनाधिकेनानिधनेर्युक्तम् इतरतद्वन्निखिलयदीयमुदितेयमार्यागीतिरिति
अनापारभपूर्वार्द्ध॥४ ॥ऽ ऽ।ऽ॥ ॥ ।ऽ ऽ। उत्तरार्द्धेऽऽ॥ऽ ऽ॥ऽ ।ऽ ॥ । ऽ।ऽ ऽऽ।सामान्यलक्षणमप्यनुसंधेयम् विशेषलक्षणस्यसामान्यलक्षणा

नित्यकांतादिगोऽद्रक्तेनामाक्षरत्नयम् भृद्यध्वीप्वगादिग्वन्हिविंश्वेषुद्वौनरोऽध्यय ९ ध्रुवधान्येजयनंदौखरकात
मनोरमसुमुखदुर्मुखोयम्

धीनत्वात् निधनेपातेध्रुवमूर्ध्वसुखम्प्रथमगृहम् धान्यपूर्वद्वारद्वितीयजयदक्षिणद्वारतृतीयम् नदमाद्य
दक्षिणद्वारचतुर्थमखरपश्चिमद्वारपंचमम् कान्तान्पश्चिमद्वारषष्ठम् मनोरमदक्षिणपश्चिमद्वारसप्तम् सुव क्रमागदक्षिणपश्चिमद्वारमष्टम
दुर्मुखमुत्तरद्वारनवमक्रूरश्चोत्तरद्वारदशमम् रिपुददक्षिणोत्तरद्वारमेकादशम् वित्तदपूर्वदक्षिणोत्तरद्वारद्वादशम् नाशाख्यपश्चिमोत्तरद्वारत्रयो
दशम् आक्रन्दनासपश्चिमोत्तरद्वारचतुर्दशम् विपुलाख्यदक्षिणपश्चिमोत्तरद्वारपंचदशम् विजयचतुर्दिग्द्वारषोडशम् १० अथकेषानिन्मत्तेनगृह
स्यायादिनयफमुपनातिभेदपथ्याचक्षाख्याभ्यामाह पिंडइति आयइति पिंडेक्षेत्रफलेनयथास्थापितेक्रमेणनवादिरकैर्गुणितेक्रमेणनागा
दिभिरंकैभक्तेयत्भाति यदवशिष्टंतदायादिकस्यात् यथाक्षेत्रफलनवभिगुणितमष्टभिर्भक्तशिष्यमायस्यात् तद्यथा पिंड २०३ नवगुणिता १८२७ फ

ष्टभक्ते शेषं ३ सिंहायोजात एवंसर्वेप्यानीताः इमेवार ७ अंशक ५ द्रव्यम् ४ ऋणम् १ नक्षत्रं ४ रोहिणीतिथिश्चतुर्थी ४ योगः २ प्रीतिःआयुः ६४ उक्तंच
ष्टभक्ते गों ९ क ९ लैं ६ ष्ट ८ गुणा ३ ष्ट ८ नाग ८ जलधि ४ व्याले ८ हृतंभूफलंनागा ८ न्यं ७ क ९ दिवाकरा १२ ष्ट ८ म २७ तिथि १५ योगैः २७ खसूर्यैः १२ भंजे
तू ११ आयवारमथांशकं धनमृणंतारांतिथिचिंतयेद्योगंचायुरितीहशेषकपदेभागेत्हृतेतांश्चिकेरिति अथैषांप्रयोजनम् विषमायः शुभायैवसमायः
शोकदुःखदः वाराणांसूर्यवारारराश्यंशाः सदावह्निभयप्रदाः यथागणितगतोभौमवारः सनिंद्यः तद्राशीमेषवृश्चिकौतौनिंद्यौ तदंशायस्मिन्कस्मिं-
श्चिल्लग्नेमेषवृश्चिकनवांशानिषिद्धाः एवंसूर्यवारोपि अन्येषांवारराश्यंशाः शुभाः अंशानांचगृहस्यागतनक्षत्रं तद्विराश्यात्मकंयदि तन्नवांशवशात्त

रिपुदंवित्तदनाशेचार्कदंविपुलंविजयाख्यंस्यात् १० पिंडेनवांकांगगजाग्निनागनागाब्धिनागैर्गुणितेःक्रमेण विभाजिते
नागनगांकसूर्यनागर्क्षतिथ्यर्क्षखभानुभिश्च ११ आयोवारोंशकोद्रव्यमृणमृक्षांतिथिर्युतिः आयुश्चाथगृहेशर्क्षगृहभैक्यंमृति

प्रदम् १२ ज्ञातव्यंसर्वदागृहमिति कृत्तिकाद्विराश्यात्मिकावशेषेमेषः इत्यादिशेषेवृषः मृगेप्यधिकेशेषेमिथुनम् अन्यथावृषः पुनर्वसावप्यंश-
त्रयंयावन्मिथुनम् अन्यथाकर्कः एवमुत्तरफाल्गुन्यादिषुद्विराश्यात्मकेषूहनीयम् नतुनिःसंदिग्धेष्वश्विन्यादिषु धनर्णयोश्च धनादिकंगृहंवृद्धौनिर्धन
म् यदृणाधिकमिति नक्षत्रस्य विपत्पदाविपत्तारा प्रत्यराप्रतिकूलदा निधनाख्यातारकातुसर्वदानिधनप्रदा अस्यार्थः गृहकर्तुर्नक्षत्राद्गृहभसंख्या
नवभक्तावशिष्टंयदिविपत्तारादिकंस्यात् तदातद्गृहमनिष्टंस्यात् अन्यथाशुभानिकश्यपः दत्तेदुःखंतृतीयर्क्षेपंचमर्क्षेयशःक्षयम् आयुःक्षयंसप्त-
मर्क्षे कर्तृभाद्यादिसद्मभमिति यदातुगृहकर्तुगृहस्यचैकमेवनक्षत्रं तत्रस्वयमेवनिर्णयमाह गृहेति गृहेशर्क्षेस्वामिनक्षत्रंप्रागुक्तप्रकारेणानीतंग्रह

धनम् श्रीशून्यं च दारिद्र्यमृतिः क्रमेणेति अथैतस्यानिष्कृष्टार्थमाह्वेति अर्कधिष्ण्याद्भैः सप्तभैरसत्फलम् ततो रुद्रैरेकादशधिष्ण्यैः सत्फलम् त
तो दिग्भिर्दशनक्षत्रैरसत्फलम् स्यादिति निष्कृष्टार्थः उक्तं च रविभात्सप्तनेष्टानि शुभान्येकादशाष्टभात् दशशेषाण्यनिष्टानि साभिजिद्रूपवास्तुनीति १३
१४ अथ सूर्यचंद्रमासैक्येन प्रागादिदिक्षु द्वाराणि गृहनिर्माणनक्षत्राणि च स्रग्धरयाह कुंभेर्के इति कुंभस्थे सूर्ये फाल्गुने च मासि प्रागपरमुखं गृहं प्राङ्मु
खं पश्चिममुखं वा गृहं सत् शुभफलं स्यात् श्रावणे मासि सिंहकर्किसंक्रांत्योश्च प्राङ्मुखं पश्चिममुखं वा गृहं स्यात् पौषमासे नक्रे मकरसंक्रांतौ च प्रागप
रमुखं गृहं स्यात् अथ गोजगे ऽर्के वृषमेषगे सूर्ये राधे वैशाखे मासि याम्योत्तरमुखं सदनं शुभं स्यात् मार्गे मार्गशीर्षे जूकालिगे तुलावृश्चिकगते सूर्ये स

कुंभेर्के फाल्गुने प्रागपरमुखगृहं श्रावणे सिंहकर्क्योः पौषे नक्रे च याम्योत्तरमुखसदनं गोजगेऽर्के च राधे मार्गे जूकालिके सत्ध्रु
वमृदुवरुणस्वातिवस्वर्कपुष्यैः सूतीगेहं त्वदित्याहरिभविधिभयोस्तत्र शस्तः प्रवेशः १५

तियाम्योत्तरमुखसदनं दक्षिणमुखमुत्तरमुखं
वा सदनं गृहं स्यात् नारदः गृहसंस्थापनं सूर्ये मेषगे शुभदं भवेत् वृषस्थे धनवृद्धिः स्यान्मिथुने मरणं ध्रुवम् कर्कटे शुभदं प्रोक्तं सिंहे भृत्यविवर्धनम् कन्या
रोगं तुला सौख्यं वृश्चिके धनवर्धनम् कार्मुके च महाहानिर्मकरे स्याद्धनागमः कुंभे तु रत्नलाभः स्यान्मीने सद्म भयावहमिति चांद्रमासानाह श्रीपतिः शो-
को धान्यं मृतिपशुहृती द्रव्यवृद्धिर्विनाशो युद्धं भृत्यक्षतिरथ धनं श्रीश्च वन्हेर्भयं च लक्ष्मीप्राप्तिर्भवति भवनारंभकर्तुः क्रमेण चैत्रादूचे मुनिभिरिति फलं वा
स्तुशास्त्रोपदिष्टमिति अत्र सौरचांद्रमासानां महान् शुभाशुभफलविरोधः अत्र चिकीर्षितगृहद्वारानुकूलरविसंक्रमसमीचीनविहितमासेष्वेव वै-
शाखादिषु गृहारंभः कार्य इति विरोधाभाव इति तथैवोपनिबद्धम् द्वारनियममाह श्रीपतिः कर्किनक्रहरिकुंभगते ऽर्के पूर्वपश्चिममुखानि गृहाणि तौ

निमेषनृपराश्निकयोगेदक्षिणोत्तरसुरवानिनकुर्यात् अन्यथायदिकरोतिदुर्मतिर्व्याधिशोकभयनाशमश्नुते मीनचापमिथुनागनागतेकारयेत्तुगृहमेवभा
स्करेऽपि तथकुंभार्केसहितेफाल्गुनेमागपरंसुरवगृहमूकार्यम् उभयोर्विहितयोरेकवाक्यताश्रयणात् एवमग्रेपिसर्वत्र जगन्मोहनेपाषाणेष्टकादि
केहानिर्निषधमासनकारयेत् तृणदारुगृहारंभेमासदोषोनविद्यतेइति अथनक्षत्राण्याह ध्रुवेति ध्रुवाणिरोहिण्युत्तरात्रयम् मृदूनिमृगरेवतीचित्रानु
राधा वरुण शततारकास्वाती वसुर्धनिष्ठा अर्कोहस्त पुष्यश्चएषुभेषुगृहनिर्माणसत्शुभस्यात् गर्ग ध्रुवोत्तरेपिचरोहिण्यापुष्येमैत्रेकरद्वये धनिष्ठा-
द्वितयेपौष्णेगृहारंभः प्रशस्यतइति अथमृगोनोक्त तदुक्तिश्चमहेश्वरायुक्ते सूतीगेहमिति आदित्यापुनर्वसोसूतिकागृहनिर्माणमप्रशस्तम् तत्रेति त
त्रसूतीगृहेद्वारिभयिधिभयोः श्रवणाभिजितयोर्नक्षत्रयोः प्रवेशः शस्तः लक्षु पुनर्वसौनुपादीनाकर्तव्यम् सूतिकागृहं श्रवणाभिजितोर्मध्येप्रवेशं तत्रकार
येदिति अथनृपपदापादानात्ब्राह्मणानापूर्वोक्तनक्षत्रमेवकार्यम् आपस्यकत्वेतुश्रवणाभिजितोर्मुहूर्तं तदुदयोपाभात्स्यः तच्चसूतीगृहंनैर्ऋत्याकार्य
म् नैर्ऋत्यासूतिकागृहमिति वसिष्ठोक्ते वराहेणात्रानेकनक्षत्राण्यभिहितानि हस्तादित्रयशाक्रपुष्य पवनब्राह्मत्वमित्रोत्तरानित्राश्विश्रवणेसुवृश्चिक
घनेऽहितारिरिक्तेतिथौ शुभवारेशनैश्चरशराशिनावारेनुकूलेविधौ सद्भिर्यमनिसूतिकागृहविधि क्षेमकरं कीर्त्यतेइति नवममासिसूतिकागृहप्र
वेशःकार्यः गर्ग मासेतुनवमेमासेपूर्वपक्षेशुभेदिने सूतिकासमयेकालेसद्यएवप्रवेशयेत् रोहिण्यैदवपौष्णेषुस्वातीवारुणयोरपि पुष्येपुनर्वसौहस्ते
धनिष्ठात्युत्तरासुच मैत्रेताष्ट्र्याश्विन्यासूतिकागारवेशनम् सर्वेशुभग्रहा केंद्रेपापाश्चत्रिषडायगा शुभांशेशुभसदृशौसूतिकावेशनशुभमिति
१९ अथमार्गाभिहितानासौराणाचाद्राणामासानामकारानरेणैकवाक्यताशार्दूलविक्रीडितेनाह केम्भिदिति पूर्वादिग्द्वारवशेनैकवाक्यतोक्ताइदा
नीमेषस्थेरवौमधोर्नेभमासेगेहमारब्धंशुभस्यात् तथावृषस्थेसूर्येज्येष्ठमासेकर्कस्थेशुचावाषाढेसिंहगतेर्केभाद्रपदेमासि घटेतुलास्थेरवौ आश्व

युज्यामाश्विनेमासेअलौवृश्चिकस्थेऽर्केऊर्जेकार्तिकमासेमृगेमकरस्थेऽर्केपौषमासेनक्रघटेमकरेकुंभेर्केमाघेप्रारब्धंगृहंशुभंस्यादित्यर्थः इतिकै
श्चिन्निगदितम् अनेनमेषेर्केचैत्रेपिशुभंगृहं यस्तुचैत्रनिषेधः समीन्वीनार्कविषयः वृषस्थेर्केज्येष्ठेपिशुभम् यस्तुज्येष्ठनिषेधः समिथुनार्कविषयः क
र्कस्थेर्केआषाढेपिशुभम् आषाढनिषेधस्तुमिथुनार्कविषयः सिंहेर्केभाद्रेपिशुभम् भाद्रनिषेधस्तुकन्यार्कविषयः श्रावणस्तुतत्रविहितत्वादेवशुभः वृ
श्चिकेर्केकार्तिकेपिशुभानिषेधविषयंस्वयमेववक्ष्यति मार्गशीर्षस्तुविहितएव मकरस्थेर्केपौषेशुभंधनुरर्कसाहित्येसोप्यशुभः मकरकुंभस्थेर्केमाघेपि-
शुभम् निषेधस्तुधनुरर्कविषय अएवसौम्यफाल्गुनवैशाखमाघश्रावणकार्तिकाः मासाः स्युर्गृहनिर्माणेपुत्रारोग्यधनप्रदाइतिनारदवाक्यम् मासासष
स्येतपसिमाधवेनभसित्विषेऊर्जेचगृहनिर्माणंपुत्रपौत्रप्रवर्धनामितिवसिष्ठवाक्यंच आश्विनकार्तिकमाघानांशुभत्वप्रतिपादकं तुलावृश्चिकमकरकु
भार्कसाहित्येप्राशस्त्यपरवचनातरैरबोधितनिषेधः प्रागुक्तविषयएव एवंफाल्गुनस्यशुभत्वंकुंभार्कविषयम् कुंभार्कराहित्येतुनिषिद्धः ननुकार्तिकमा
घमासौश्रीपतिनानिषिद्धौ तयो कोविषयइत्यतआह अथेति ऊर्जः कार्तिकोमासः कन्यागतेर्केनसत्नशुभः नपुनः तथामाघमासः धनुष्यपि धनुरर्केनस
न्नन्वेतदयुक्तम् यत शुक्लादित्वाद्रमासेन्वैत्रादिमाससंज्ञाः संति तत्रकार्तिकेकन्यासंक्रांतिमासेधनुःसंक्रांतिश्चकदापिनसंभवति अतआह कृष्णादिमा
सादिति मासोद्विविध शुक्लादि कृष्णादिश्च तत्रचैत्रशुक्लप्रतिपदारभ्यामावास्यापर्यंतंशुक्लादिः कृष्णप्रतिपदमारभ्यपूर्णिमापर्यंतं कृष्णादिः उभयत्रा
पिशास्त्रेव्यवहारः आश्वयुक्कृष्णपक्षेतुश्राद्धंकुर्याद्दिनेदिनेइति मासिभाद्रपदेष्टम्यांकृष्णपक्षेर्धरात्रके भवेत्प्रोष्ठपदेमासिजयंतीनामसास्मृतेतिच अत्र-
यदिदर्शांतोमासोविवक्ष्यतेतदा भाद्रपदकृष्णपक्षेश्रावणेमासेचेत्येवंब्रूयात् तदेतन्मासस्य कृष्णादित्वेप्रमाणम् तत्राश्विनपूर्णिमातः कार्तिकपूर्णि
मानकृष्णादित्वेनव्यवहारात्तत्रकन्यासंक्रांतिसंभवान्निषेधउपपन्नोभवति एवमेवमाघेमासिधनुरर्कसंभवेननिषेधसार्थक्यमित्यलम् १६ अथाति

धिपरत्वेनद्वारनिषेधमूपाऽऽन्निकयाह पूर्णेंदुत इति पूर्णेंदुतः पूर्णिमातः कृष्णाष्टमीपर्यंतं प्राङ्मुखम् गृहम् शुभं नवदंति कृष्णनवमीतश्चतुर्दशीपर्यंतं क्रिय
माणमुत्तरास्यं न शुभम् अपदर्शादितः शुक्लाष्टमीपर्यंतं पश्चिमास्यं गृहं न शुभम् शुक्लनवमीतश्चतुर्दशीपर्यंतं दक्षिणास्यं गृहम् शुभं न वदंति तासु तासु ति
थिषु तत्तद्दिङ्मुखं गृहं न कर्तव्यमित्यर्थः व्यवहारोच्चये पूर्णिमातोऽष्टमीयावत् पूर्वास्यं वर्जयेद्गृहम् उत्तरास्यं न कुर्वीत नवम्यादिचतुर्दशीम् अमायाश्चाष्टमी
यावत् पश्चिमास्यं विवर्जयेत् नवम्यादौ दक्षिणास्यं यावच्छुक्लचतुर्दशीमिति वेधादिविचारो नोल्लिखितो ग्रंथगौरवात् १७ अथ प्रागुक्तादिलग्न शुद्ध्या

केचिन्मेषवृषौ मिथुनकर्कौ च कन्येशतुलौ कर्कटे मादेसिंहगते घटे भ्रस्युर्मिनौ तौ लौ मृगे पौषके मापे न कुंभे शुभानि गादितगेहे तथोर्जे
न सत्कन्यायां न तथा धनुष्यपि न सत्कृष्णादिमासाब्दे सत् १६ पूर्णेंदुतः प्राग्वदनं नवम्यादिषूत्तरास्यं त्वथ पश्चिमास्यम् दर्शादिने
शुक्लदले नवम्यादौ दक्षिणास्यं न शुभं वदंति १७ भौमार्करिक्ताऽऽमा द्यूनं न वरोनं गावि पंचकं व्यष्टांत्यस्थैः शुभैर्गेहारंभस्त्र्यायारिगैः
खलैः १८ नृष्टभाह भौमार्केति भौमार्कवारौ रिक्ताश्च प्रसिद्धा अमावास्या आदितः यत् उपलक्षणत्वादष्टम्यापि एतैरूने काले तथाच र राशिमेषक
र्कतुलामकरे रहिते लग्ने स्थिरे द्विस्वभावे तथा विपचके रुगनलनृपचोरमृत्युसंज्ञकपंचकरहिते इत्यर्थः उक्तं च दारिद्र्यं प्रतिपत्कुर्याच्चतुर्थी धनहारिणी
अष्टम्युच्चाटनं चैव नवमी शस्त्रघातिनी दर्शे राजभयं ज्ञेयं भूते दारविनाशनमिति माण्डव्ये नक्षत्रपंचके धनिष्ठापंचके नैव कुर्यात्तंभसमुच्छ्रयः सूत्र
धारशिलान्यासप्राकारादिसमारंभे दिति व्यष्टांत्य इति अष्टमद्वादशस्थानव्यतिरिक्तस्थैः शुभैः पापैस्तृतीयैकादशषष्ठस्थानस्थैश्चोपलक्षिते ल
ग्ने गृहारंभः कार्यः १८

अथदेवालयादौविवक्षुराहुमुखमिंद्रवंशयाह देवालयइति अत्रयथासंख्यंसंबंधः देवालयप्रारंभेराहुर्मुखंमीनार्कतस्त्रिराश्यवस्थितेसूर्येऐशानीतोवि
लोमतोविपरीतंविदिक्षुवायव्यादिषुराहुमुखस्यात् यथामीनमेषवृषराश्यवस्थितेसूर्येईशान्यांराहुमुखम् मिथुनसिंहकर्कस्थितोर्के वायव्याम् कन्यातु-
लावृश्चिकस्थितेर्केनैर्ऋत्याम् धनुर्मकरकुंभस्थेऽर्केआग्नेय्यांराहुमुखमित्यर्थ एवंगृहारंभेपिसिंहार्कतस्त्रिराश्यवस्थितेर्के विलोमतः ईशान्यांराहुमुखंस्यात्
वृश्चिकादित्रिभेवायव्यांकुंभादित्रिभेनैर्ऋत्यांवृषादित्रिभेआग्नेय्यांराहुमुखमित्यर्थः तथाजलाशयप्रारंभेपिमकरतस्त्रिराश्यवस्थितेर्केविलोमतऐशान्यांरा
हुमुखंस्यात् मेषादित्रिभेवायव्याम् कर्कादित्रिभेनैर्ऋत्याम् तुलादित्रिभेआग्नेय्यांराहुमुखंस्यादित्यर्थः फलमाह खातेइति देवालयादिविषयकेखाते भू

देवालयेगेहविधौजलाशयेराहोर्मुखंशंभुदिशोविलोमतः मीनार्कसिंहार्कमृगार्कतस्त्रिभेखातेमुखात्पृष्ठविदिक्शुभोभवेत् १९
कूपेवास्तोर्मध्यदेशेऽर्थनाशस्त्वैशान्यादौपुष्टिरैश्वर्यवृद्धिः सूनोर्नाशः स्त्रीविनाशोमृतिश्चसंपत्पीडाशत्रुतःस्याच्चसौख्यं २० छ

मिशोधनेकर्तव्येसतिराहुमुखाक्रांतदिशः सकाशात्पृष्ठवर्तिनीविदिक्शुभाभवेत् अथैशान्यांराहुमुखंतत्पृष्ठदिगाग्नेयीतस्यांप्रथमखातारंभः शुभफ-
लदः एवंवायव्यांराहुमुखंतत्पृष्ठविदिगैशानीतस्यांखातारंभः एवंसर्वत्र उक्तंच ईशानतः सर्पतिकालसर्पोविहायसृष्टिंगणयेद्विदिक्षु शेषोस्यवास्तोर्मुख
मध्यपुच्छत्रयंपरित्यज्यखनेच्चतुर्थम् वृषार्कादित्रयंवेद्यांसिंहादिगणयेद्गृहे देवालयेचमीनादितडागेमकरादिकमिति खातारंभादिनक्षत्राण्याहमांडव्यः
अधोमुखैर्भैर्विदधीतखातशिलास्तथैवोर्ध्वमुखैश्चपट्टम् तिर्यङ्मुखैर्द्वारिकपाटदानंगृहप्रवेशोमृदुभिर्ध्रुवर्क्षैरिति १९ अथगृहेकूपनिर्माणदिग्वशात्स्थि-
त्याफलशालिन्याह कूपेइति वेश्मभूर्वास्तुरस्त्रियामितिवास्तुशब्दः पुल्लिंगःवास्तोर्गृहस्यमध्यभागेकूपेजलकूपेसतिस्वामिनोऽर्थनाशः स्यात् अथैशान्यां-

दिक्षुसृष्टिमार्गेणपश्चादिक्ष्वपिइत्यादिफलं यथैशान्यांकूपेपुष्टिः पूर्वस्यामैश्वर्यवृद्धिः आग्नेय्यांपुत्रनाशः दक्षिणस्यांस्त्रीविनाशः नैर्ऋत्यांगृहपतेर्मृतिः
पश्चिमायांसंपत् वायव्यांशत्रुतः भयंशात्पीडास्थानं उत्तरस्यांकूपकरणेगृहस्वामिनएव वसिष्ठः ऐश्वर्यंपुत्रहानिःस्त्रीनाशोनिधनंभवेत् संपच्छत्रु
भयंसौख्यंपुष्टिः भयादितः क्रमात् कूपेकृतेमध्यमेतुधनहानिर्हिवास्तुनीति अथकूपारम्भेचक्रमाह कूपेकृशान्म्यगतास्त्रिभिर्भैः स्वादुदकपूर्वादि
शिभिभिर्भैः खडजलंस्यात् जलजलक्षयस्वादूदकं क्षारजलशिवाम्बुजलक्षारजलमिष्टक्रमात् पुच्छेहास्यं भानित्रिभिस्त्रिभिर्मितैः शुभाशुभमिति २० अथ
दिक्फलेनउपकरणगृहाणिपस्ततिलकयाह स्नानस्येतिपूर्वतः पूर्वादिषट्दिक्षुस्नानतः गृहाणिस्युः यथा पूर्वस्यांस्नानगृहम् आग्नेय्यांपाकगृहम्

स्नानाग्निपाकशयनास्त्रभुजेश्चधान्यभाण्डारदैवतगृहाणिचपूर्वतःस्युः तन्मध्यतस्तुमथनाज्यपुरीषविद्याभ्यासाख्यरोदनर
तौषधसर्वधाम २१

दक्षिणस्यांशयनगृहम् नैर्ऋत्यांशस्त्रगृहम् पश्चिमायांभोजनगृहम् वायव्यांधान्यसंग्रहगृहम् उत्तरस्यांभाण्डारकोशगृ
हम् ऐशान्यांदेवगृहम् वसिष्ठः ऐन्द्र्यादिदिक्षुस्नानगृहमाग्नेय्यांपचनालयम् याम्यायांशयनंवेश्मनैर्ऋत्यांशस्त्रमन्दिरम् वारुण्यांभोजनगृहंवायव्यांधा
न्यमन्दिरम् उदीच्यांहाटकस्यैशान्यांदेवमन्दिरमिति नारदस्तु भाण्डागारंतूत्तरस्यांवायव्यांपशुमन्दिरमिति पूर्वादिषट्दिक्षुतन्मध्यतः तयोर्दिग्विदिशो
र्मध्ये एतस्याकेमथनायसौगृहाणिस्युः यथा पूर्वाग्नेययोर्मध्येलोडनस्यगृहंस्यात् आग्नेयीदक्षिणयोर्मध्ये आज्यस्यघृतसंग्रहस्य दक्षिणनैर्ऋत्यो
र्मध्येपुरीषस्यविसर्गस्यगृहम् नैर्ऋतिपश्चिमयोर्मध्येविद्याभ्यासस्य पश्चिमवायव्ययोर्मध्येरोदनस्यगृहम् वायव्योत्तरयोर्मध्येरतस्यसम्भोगस्य
गृहम् उत्तरैशान्ययोर्मध्येऔषधस्यगृहम् ऐशानीप्राच्योर्मध्येउक्तव्यतिरिक्तसर्ववस्तूनांधामगृहंकार्यंस्यादित्यर्थः वसिष्ठः इंद्राग्न्योर्मथनंमध्येयाम्या

ग्न्योर्घृतमंदिरम् यमराक्षसयोर्मध्येपुरीषत्यागमंदिरम् राक्षसांबुपयोर्मध्येविद्याभ्यासस्यमंदिरम् तोयेशानिलयोर्मध्येरोदनंमंदिरंतत. कामोपभोग
सदनवायुकौबेरमध्यमे कोबेरैशानयोर्मध्येचिकित्सामंदिरंसदा गृहंहरीशयोर्मध्येसर्ववस्तुषुसंग्रहम् सदनंकारयेदेवंक्रमादुक्तानिषोडशेति २१ अथवि
शेषउपजातिकयाह जीवार्केति अत्रयोगद्वयेग्रहस्थानयोर्यथासंख्यंसबंधः यथाजीवोलग्ने अर्कोऽरीषष्ठेविधुर्जामित्रे सप्तमे शुक्रश्चतुर्थेशनिस्तृतीः
येएवंविधेलग्नेप्रारब्धस्यगृहस्यास्थितिरब्दशतंवर्षशतंस्यात् अयमेकोयोगः सितेति शुक्रोलग्ने अर्कस्तृतीये आरःषष्ठेईज्यः पंचमेएवंविधे प्रार-
ब्धस्यगृहस्यस्थितिःद्वेशतेवर्षेशतद्वयंस्यात् २२ अथान्ययोगद्वयमिंद्रवंशयाह लग्नांबरायेषिति अत्रापियोगद्वयेस्थानग्रहयोर्यथासंख्यंसंबंध. लग्ने:

जीवार्कविच्छुक्रशनैश्चरेषुलग्नारिजामित्रसुखत्रिगेषु स्थितिः शतंस्याच्छरदांसितार्कारेज्यैतनुत्र्यंगसुतेशते द्वे २२ लग्नांबराये
षुभृगुज्ञभानुभिः केंद्रेगुरोवर्षशतायुरालयम् बंधोगुरुर्व्योम्निशशीकुजार्कजौलाभेतदाशीतिसमायुरालयम् २३

शुक्रः दशमेबुधः
एकादशेसूर्यः लग्नव्यतिरिक्तकेंद्रेगुरु. तदेवंविधेयोगेप्रारब्धआलय. गृहंवर्षशतमायुरवस्थानंयस्यतादृशंस्यात् अथद्वितीयः बंधाविति चतुर्थेगुरुः
दशमेचंद्रः मंगलशनैश्चरावेकादशेतदागृहमशीतिसमावर्षाण्यायुर्यस्यतादृशंस्यात् २३ अथान्ययोगत्रयमनुष्टुभाह स्वोच्चइति स्वोच्चस्थेमीनस्थेशुक्र
केलग्नगतेअथवास्वोच्चस्थेकर्कस्थेगुरौचतुर्थस्थानगतेसति अथवास्वोच्चस्थेतुलास्थेशनौएकादशस्थानगतेसतिचिरंलक्ष्म्यायुक्तंगृहंस्यात् यदास
मुदायोभवेत् तदायतनावधिलक्ष्म्यायुतंस्यात् २४ अथगृहस्यपरहस्तगामित्वयोगमनुष्टुभाह द्यूनांबरेइति एकोपिग्रहोऽत्युत्कृष्टशुभफलदा
तापराशस्थ. सन्यदिद्यूनेसप्तमेस्यात् अथवाअंबरेदशमेस्यात्तदासंग्रहः तद्गृहंप्रारब्धं अब्दांतःवर्षमध्येएवपरहस्तस्थं अन्यहस्तगामिकुर्यात्

नैरूर्णप ब्राह्मणादिवर्णस्वामी विनाधीशौ भार्गवेज्यावित्याद्यभिहित सवेदबलः स्यात् यदास्ववर्णाधीश सबल स्यात्तदापरहस्तगामिनस्यादित्यर्थः २५ अथान्यविशेषवसतनिलकयाह पुष्येति पुष्य ध्रुवाणि त्रसिद्धानि इंदु मृग हरि श्रवण सर्पाआश्लेषाजलं पूर्वाषाढा एतैर्नक्षत्रै सजीवे गुरुयुक्ते तद्वास रेणगुरुवासरेण कृतकर्तुमारब्धगृहं कृतान् पुत्रान् राज्यन्ददातिनारदशस्यात् अत्रैसमतिर्षिसिधनारदवाक्यंत द्वीशेति द्वीशाविशाखाआश्विनीतक्ष चित्र वसुधनिष्ठा पाशीशतभम् चिरआर्द्राएतैर्नक्षत्रे सशुक्रे शुक्रसहिते सितस्यशुक्रस्यवासरेन कृतगेहम् धनानिसुवर्णानि धान्यानि इत्यादीनिददातिति हशगृहस्यात् तथान्ननारद श्रवणापादयोश्चरोहिण्यानोत्तरात्रये गुरुवारे कृतवेश्म राज्ययोगाभिहीयते तद्गृहेजातपुत्रस्यराज्य भवतिनिश्चयात् अत्र

सौम्येशुक्रेलग्नेगेवागुरौवेश्मगतेयथा शनौस्वोच्चेलाभगेवालस्यायुक्तंचिरगृहम् २४ धूनावरेपदेकोपिपराशस्थोयहोगृहम् अ द्वात परहस्तस्थकुर्याच्चेदूर्णपाःबल २५ पुष्यध्रुवेंदुहरिसर्पजले सजीवेस्तद्वासरेणचकृतंसुतराज्यदस्यात् वसिष्ठवाक्येनक्षत्रा-

धिस्यतदनुसारेणमूलेन सत्राभिधानईज्योत्तरात्रयार्द्राहुदिषणुपानृजलोडुषु गुरुणासहितेष्वेषुकृतगेहाश्रियान्वितमितिवसिष्ठोक्ते अश्विनीशततारासुचि त्रराद्रानित्रकेथाने धातानभेशुक्रसयुक्ते शुक्रवासरे तद्वेश्मनिश्रवानस्तुकुबेरसदृशोभवेत् अत्रापिनक्षत्रभेदाःग्रागत्तसमाधिः२६ अथान्ययोग रूपमिंद्रवज्रयाहसारैरितिहस्तपुष्यरेवतीमघापूर्वापादामूलै सारैर्मंगलसहिते कोजेभौमसवाधिनिभान्हिवारेकृतगृह आग्निसकृतार्तिदं आग्निपीडा कृतपीडांददातिनारदशंस्यात् उक्तंच मूलनरेवतीचैवकृत्तिकापाटमेवच एषुभौमेनयुक्तेषुवारेतस्यैवनिर्मितम् आग्निनादह्यतेकृत्स्नगृहमनात्रमसंशय नि सर्वतोरितिरोहिण्यत्तिन्युत्तराफल्गुनीचित्राहस्ते सप्तस्युधयुक्ते स्वस्यचवारेकृतगृहंसुतप्रदंस्यात् उक्तंचह्मार्यमत्वाष्ट्रदास्रउत्तरास्योत्तुभे

पिवा सबुधे बुधवारेच धनपुत्रसुखप्रदमिति २७ अथान्यं योगमनुष्टुभाह अजैकपादिति पूर्वाभाद्रपदोत्तराभाद्रपदाज्येष्ठानुराधास्वातीभरणीनक्षत्रे समंदे शनैश्चरसंयुक्ते मंदस्यैव वारेच प्रारब्धं गृहं रक्षोभूतैश्च युतं स्यात् उक्तंच अजपाद्धितये याम्यमित्रेंद्रानिलभेपि वा समंदे मंदवारेच गृह्यते यक्षराक्षसैः पुत्रे जाते थवा तस्मिन् गृह्यते यक्षराक्षसैरिति अत्रायं निष्कृष्टार्थः पूर्वं गृहारंभनक्षत्राण्यवधेयानि ततो वृषवास्तुचक्रे शोध्यानि पश्चादिदं योगपंचकं विचार्यम् एवं गृहारंभः शुभफलदो भवेत् २८ अथ केषांचिन्मतेन द्वारचक्रं सफलं शार्दूलविक्रीडितेनाह सूर्यर्क्षादिति सूर्याधिष्ठितनक्षत्रात् युगभैश्चतुर्भिर्नक्षत्रैः शिरसि उपरि अवस्थितैः फलं कर्तुः लक्ष्मीप्राप्तिः स्यात् ततः नागभैः अष्टभिः कोणगैः कोणेष्ववस्थितैः उद्वसनं जनावासरहितस्यात् तदग्रभैर्गजमितैरष्टमितैर्द्वारशाखा

ईशाश्वितक्षवसुपाशिशिवैः सशक्रैर्वारे सितस्य च गृहं धनधान्यदं स्यात् २६ सारैः करेज्यांत्यमघांबुमूलैः कौजेऽह्नि वेश्माग्निसुतार्तिदं स्यात् सज्ञैः कदास्त्रार्यमतक्षहस्तैर्ज्ञस्यैव वारे सुखपुत्रदं स्यात् २७ अजैकपादहिर्बुध्न्यशक्रमित्रानिलांतकैः समंदैर्मंदवारे स्याद्रक्षोभूतयुतं गृहम् २८ सूर्यर्क्षाद्युगभैः शिरस्यथ फलं लक्ष्मीस्ततः कोणभैर्नागैरुद्वसनं ततो गजमितैः शाखासु सौख्यं भवेत् देहल्यां गुणभैर्मृतिर्गृहपतेर्मध्यस्थितैर्वेदभैः सौख्यं चक्रमिदं विलोक्य सुधिया द्वारं विधेयं शुभम् २९

वस्थितैर्गृहस्वामिनः सौख्यं स्यात् तदग्रिमैः गुणभैस्त्रिभिर्नक्षत्रैर्देहल्यामवस्थितैर्गृहस्वामिनो मृतिः स्यात् ततस्तदग्रिमैर्वेदभैश्चतुर्भिर्नक्षत्रैः मध्यरूपे अवकाशस्थितैः सौख्यं स्यात् फलितार्थमाह चक्रमिति इदं चक्रं विलोक्य सुधिया शुभं शुभफलदं द्वारं विधेयं कर्तव्यमिति अनेनोपसंहरति २९ इति मुहूर्तचिंतामणिटीकायां प्रमिताक्षरायां द्वादशगृहारंभप्रकरणं समाप्तम् १२ ॥ अथ गृहप्रवेशप्रकरणं व्याख्यायते तत्र प्रवेशश्चतुर्धा अपूर्वप्रवेशः द्वंद्वाभयप्रवेशः

वपूर्मवेशश्चतिनत्रवपूर्वप्रवेशस्यान्वर्थसंज्ञकत्वाल्लक्षणनोक्तम् सनप्राग्भिहितं अन्येषांलक्षणमाह वसिष्ठ अपूर्वसंज्ञ प्रथमप्रवेशोयात्रावसानेतु अपूर्वसंज्ञ द्वद्वभयस्तोग्निभयादिजातस्त्वेनप्रवेशस्त्रिविध प्रदिष्टइति नवग्रहनिर्माणेयः प्रथम प्रवेश सोपूर्वसंज्ञः प्रवेश यस्तुयात्रानिवृत्त्यनंतरं गृहप्रवेशः ससपूर्वसंज्ञ यस्तुअग्निभयेनाग्निदाहेन आदिशब्देनअन्येनराज्ञापातितेनगृहनाशस्तदृह यदापुनःसंपाद्यते तास्मिन् ये प्रवेशः सद्वंद्वाभय इत्युच्यते अन्वर्थसंज्ञानेय द्वंद्वशीतोष्णम् अत्रशीतशब्देनजलम् उष्णशब्देनाग्निरुच्यते लक्षणयानेलाप्लवेनानवरतवृष्टिपातेनवागृहपातस्तज्जलभयम् अग्निकृतदाहेनयोगृहनाशस्तदग्निभयम् तस्माच्छीतोष्णरूपात् द्वंद्वात्पुनरुत्थापनेनयदभयमित्युच्यते द्वंद्वभयविध्यते तास्मिन्नित्यर्थः आदि

इतिमुहूर्तचिंतामणौवास्तुप्रकरणसमाप्तम् ७ अथगृहप्रवेशप्रकरणप्रारंभ सौम्यायनेज्येष्ठतपोत्यमाधवेयात्रानिवृत्तौ नृपतेर्नवेगृहे स्याद्वेशनद्वास्थमृदुध्रुवोडुभिर्जन्मर्क्षलग्नोपचयोदयेस्थिरे १

ज्योतिर्विमतर्थीयोन्मत्सय तादृशः प्रवेशोद्वंद्वाभयइ तत्रापूर्वसपूर्वप्रवेशयोः कालशुद्ध्यादिमिंद्रवज्रयाह सौम्यायनेइति एषुसौम्यायनेइत्यादिकेषु पदार्थेषु सत्सु नृपतेर्यात्रानिवृत्तौ अथवानवेनूतनेतोत्ते गृहेवेशनप्रवेशनस्यात् अत्रसौम्यायनइतिमदवृद्धीनाशीप्रभृतिपत्यर्थं ज्येष्ठेति ज्येष्ठमाघफाल्गुनवैशाखेषुप्रवेशनंशुभम् नारद अपिसौम्यायने कार्यनवेश्मप्रवेशनम् राज्ञायात्रानिवृत्तौचेति तथामाघफाल्गुनवैशाखज्येष्ठमासेषुशोभनः प्रवेशोमध्यमोज्ञेयः सौम्यकार्तिकमासयोरिति मध्यमो क्तिएवश्यकविषयाद्वास्थेति यस्मिन्गृहप्रवेशः कर्तुमिष्यतेतस्ययस्यादिशिमुखंनहिद्वारक्षत्रेपूर्वादिषुचतुर्दिक्षुसप्तसप्तानलर्क्षाद्यैरित्याद्युक्ते ७ ८ वनक्षत्रेप्रवेशनंस्यात् यद्दिक् द्वारमंदिरंतद्दिग्गृहद्वारतर्क्षैस्यात्सप्रवेशनसर्वैरितिवसिष्ठोक्ते अन्यदपितत्रैव अर्कानिलार्पादितिदस्रविष्णुक्षेम

वर्मादिरंयत् अब्दत्रयान्तत्परहस्तया तंशेषेषुधिष्ण्येषुत्वमृत्युदंस्यादिति जन्मर्क्षेति जन्मर्क्षजन्मराशि. जन्मलग्नप्रसिद्धं ताभ्यामुपचयतृतीयषष्ठदशमैकाद
शस्थानतास्मिन् उदयेलग्नेस्थिरेस्थिराख्येवृषसिंहवृश्चिककुंभाख्येलग्नेप्रवेशनंशुभम् नारदः कर्तुर्जन्मभलग्नेवा ताभ्यामुपचयेपिवा प्रवेशलग्नेस्याद्वृद्धिर
न्यभेशोकनिस्वतेति सौम्येस्थिरेभेशुभदृष्टियुक्तेलग्नेऽथवाह्यंग गृहेविलग्ने इतिचसौम्यग्रहयुक्तेद्वंगेद्विस्वभावराशौ १ अथजीर्णगृहप्रवेशोविशेषमिंद्रव
ज्रयाह जीर्णगृहइति जीर्णेपुरातनेऽन्यनिर्मितेगृहेअग्निभयात् अग्निनादाहात् आदिशब्देनबहुवृष्टिराजकोपाद्युपद्रवात्पतितेगृहेपुनरपिसम्यगेवकृते
उत्थापितेपूर्वोक्ताः सर्वेपिमासाज्ञेयाः किंतमार्गोर्जयोः मार्गशीर्षकार्तिकयोश्चश्रावणिकेपि श्रावणेपिविशःप्रवेशःसन्शुभफलदः स्यात् सनत्कुमारः गृहारंभोदि

## जीर्णेगृहेग्न्यादिभयान्नवेपिमार्गोर्जयोःश्रावणिकेपिसत्स्यात् वेशोंबुपेज्यानिलवासवेषुनावश्यमस्तादिविचारणाऽत्र २

तैर्मासैर्धिष्ण्यैर्वारैर्विशेद्गृहमिति अत्रसामान्यतोगृहारंभोदितामासागृहप्रवेशेऽभिहिताः तेचसौम्यफाल्गुनवैशाखमाघश्रावणकार्तिकाः मासाः स्युर्गृहनिर्मा
णेपुत्रारोग्यधनप्रदाइति नारदोक्तेमार्गशीर्षफाल्गुनश्रावणकार्तिकविहिता. तत्रोत्तरायणएवगृहप्रवेशस्यवाक्यांतरविहितत्वात् श्रावणकार्तिकमार्गशीर्षा
णामुत्तरायणत्वाभावात् विरोधेनूतनजीर्णगृहप्रवेशाभ्यांव्यवस्थाकथंप्रागभिहितानारदवाक्येनउत्तरायणसाहचर्येण नूतनगृहप्रवेशसपूर्वप्रवेशयोर्विधा
नात् गृहारंभोदितैर्मासैरित्यनेनतुसामान्यतस्त्रिविधस्यापिप्रवेशस्यविधानादुत्तरायणीयमासास्त्रिविधगृहप्रवेशेशुभाः दक्षिणायनीयमासाः श्रावणा
दयस्तुजीर्णगृहप्रवेशविषयाः अतएवनारदोमार्गशीर्षकार्तिकयोर्नूतनप्रवेशेमध्यमत्वमाह अर्थादेवजीर्णगृहप्रवेशेउत्कृष्टमध्यत्वेस्याताम् अंबुपेति अं
बुपः शततारकाइज्यः. पुष्यः अनिलः स्वातीवासवं धनिष्ठाएषुभेषुजीर्णगृहेअग्न्यादिभयान्नवेपिगृहप्रवेशः शुभः प्राक्पद्योक्तनक्षत्रेषुतुशुभएवेतिकेमुति

कन्यायादवगम्यते ज्योतिःप्रकाशे प्रवेशो नूतने हर्म्ये ध्रुवैर्मित्रैः सर्वासये पुष्यस्वातीयुतैस्तैस्तु जीर्णे स्याद्वासवद्वयेति नावश्यमिति अन्येवाभिधे जीर्णे
गृहे अग्न्यादिभया नवेपि आवश्यकमस्तादिविचारणा शुक्रास्तगुर्वस्तबाल्यवार्धकसिंहस्थगुर्वादिदोषाणां विचारणा विचारो नास्ति अस्तादयः कालदो-
षा सन्तु मा वा सन्तु तथापि गृहप्रवेशः कार्यः सोपि पञ्चाङ्गशुद्धिमात्रमङ्गीकृत्य विहितनक्षत्रेष्वेव कार्यः ज्योतिःप्रकाशे नित्ययाने गृहे जीर्णे प्राशने परिधानके
वधूप्रवेशे मांगल्ये न मौढ्यं गुरुशुक्रयोरिति वसिष्ठः नवप्रवेशेत्यथ कालसिद्धिर्नहि ह्रसोपूर्तिकया कदाचित् प्रवेशपञ्चाङ्गदिने सुलग्ने वास्तुनं नूनं पूर्ववदेव
कुर्यात् पूर्ववदेव नूतनप्रवेशे यदा वास्तुपूजा न प्राक् हृह्सौ पूर्विकयोरपि कार्येत्यर्थः नारदेन तु यात्राविधिनिर्दिष्टे प्रवेशे कालरूपाद्द्वारपासिनेवेतितद्वास्यभाग
भिहितं तदेव तत्र पोर्गौस्य योराव रपक्ष्मनवत्वेन व्यवस्था अत्राभिविधेपि प्रवेशे प्रवेशनक्षत्रं क्रूराक्रान्तं क्रूरविद्धं वा सर्वथा वर्ज्यम् वसिष्ठः क्रूरगृहाभिभि-
ताविद्धं भवचाविवर्जनीयं विधिविप्रवेशाद्विति २ अथ गृहप्रवेशादिनात्प्राक्कर्तव्यं वास्तुपूजाविधिं वक्ष्यन् नक्षत्राणि उपजातिकापूर्वार्द्धेनाह मृदुध्रुवेति एषुस-
न्दरास्कूनरसबेधुवा सुपुरुषस्यार्थेन भूतबलिं च कारयेत् गृहपतिर्वास्तुपूजां न कुर्यात् पुरोहितो वास्तुपूजां च कारयेत् तयोरन्यतरस्याभिसंयोगो कर्तु क-
र्तव्यम् वास्तुपूजाप्रकारमाह वसिष्ठः निर्माणे मन्दिराणां च प्रवेशे त्रिविधेपि च वास्तुपूजा प्रकर्तव्या यस्मात्ता कथयाम्यहं गृहमध्ये हस्तमात्रसमं नात्तुलो-
परि एकाशीतिपदं कार्यं पलेस्तुल्ये सुशोभनम् एकद्वित्रिपदाः पञ्चचत्वारिंशत्सुरार्चिताः द्वात्रिंशद्बाह्यतो वक्ष्यमाणाभान्तस्वपादशः तेषां स्थानानि नामानि
च स्यामीश्वरकोणेन गमाग्निः शुभकोणस्थस्ततः सोप्येकपदेश्वरः आकाशश्चापुरस्ततः क्रमादेकपदेश्वरौ एवमाग्न्यानवद्व्यासात्खेवमेपान्यदिक्षु च आ-
पश्चात्यावेकपदौ द्विपदा पञ्चमध्यगा शिख्याद्यशानाकशीनाः अमराः पूर्वभागगाः आपश्चात्यावेकपदौ द्विपदाः पञ्चमध्यगा पूषाद्याः सौम्यगता सुरमरा
याम्यभागगा आपश्चात्यावेकपदौ द्विपदा पञ्चमध्यगा अष्टौपिमृगणाधीशास्पापामाः पश्चिमे सुराः आद्यवौद्यावेकपदौ द्विपदाः पञ्चमध्यगा रोगादि-

दित्यंतस्करा सससौम्यादिशिक्रमात् तत्राधस्थच्चतु·कोणेत्वीनाशादिषुचक्रमात् आप.सावित्रविजयरुद्राश्चैकपदेश्वरा. मध्येनवपदोत्र ह्मातस्यैशाना-
दिकोणगाःआपवत्सोथसावितविबुधाधिपसज्ञक: राजयक्ष्माच्चत्वारः स्कराश्चैकपदेश्वरा. ब्राह्मणः पूर्वतोदिक्षत्रिपदाश्चामराअमी अर्यमाचविवस्वांश्च
मित्रः पृथ्वीधरःक्रमात् स्वस्वस्थलेषुदेवेषुस्थापितेष्वीदृशंभवेत् कोणेषुपंचपंचैवच्चतुर्थैकपदाः सुराः प्रागादिदिक्षुद्विपदा.पंचपंचयथाक्रमम् ब्राह्मणःपूर्व
तोभूयादपिनेषीदृशंभवेत् कोणेषुपंचपंचे क्षुद्विपदाः स्युः समीपगाः हिरण्यरेताः पर्जन्योजयंतः पाकशासन. सूर्यः सत्योभृशाकाशौवायुः पूषाचवैतथा गृह
क्षतः पितृपतिर्गंधर्वोभृंगराजक. यम पितृगणाधीशस्तथादौवारिकाव्हयः स्कग्रीवःपुष्पदंतश्चजलाधीशोनिशाचरः शेषःपापश्चरोगोहिर्मुख्योभल्लाटए

मृदुध्रुवक्षिप्रचरेषुमूलभेवास्त्वर्चनंभूतबलिंचकारयेत् त्रिकोणकेंद्राय धनात्रिगैः शुभैर्लग्नेत्रिषष्ठायगतैश्चपापकैः २

वच सोमसर्पौदित्यादितीद्वात्रिंशदमरा स्मृता· आपश्चैवापवत्सश्चजयोरंभस्तथैवच मध्येनवपदोब्रह्मातस्यैतस्यसमीपगाः प्रान्याद्यंतरितादेवाःपरितोब्र-
ह्मणःस्मृताः अर्यमासविताचैवाविवस्वान्विबुधाधिपः मित्रोथराजयक्ष्माचतथापृथ्वीधरःक्रमात् आपवत्सोष्टम. पंचचत्वारिंशत्सुरोत्तमाः ज्ञात्वैवंस्थानमाना
निब्रह्मणासहितान्यजत् वास्तुज्ञोवास्तुमंत्रेणगंधपुष्पाक्षतादिभि. प्रणवेनार्चयेद्वापिअथवास्वस्वनामभिः शुक्लवस्त्रयुगंदद्याद्धूपदीपफलैःसह अपूपैर्भू
रिनैवेद्यैर्वाद्यैःसहसमर्चयेत् तांबूलंचततोदद्याद्देवेभ्यश्चपृथक्पृथक् दत्वापुष्पांजलिंकर्ताप्रार्थयेद्वास्तुपूरुषम् वास्तुपुरुषनमस्तेस्तुभूशय्यानिरतः प्रभो म-
द्गृहंधनधान्यादिसमृद्धंकुरुसर्वदा इतिप्रार्थ्यततोदद्याद्दक्षिणामर्चकायच विप्रेभ्योभोजनंदत्वास्वयंभुंजीतबंधुभिः एवंयःकुरुतेसम्यग्वास्तुपूजांप्रयत्नतः
आरोग्यंपुत्रपौत्रादिधनधान्यलभेन्नरः वास्तुपूजामकृत्वायःप्रविशेन्नवमंदिरम् रोगान्नानाविधान्क्लेशानश्नुतेबहुसंकटम् इतिवसिष्ठसंहितायांवास्तुशां

सूर्य. स्यात् तथालग्नाद्यत्पंचमस्थानंततः पंचसुस्थानेषु रवौस्थिते दक्षिणाभिमुखेवामोर्कः तथैवलग्नाद्यद्द्वितीयस्थानंततः पंचसुस्थानेषुरवौस्थिते पश्चिमाभिमुखेवामोर्कः तथैवलग्नाद्यदेकादशस्थानंततः पंचसंख्यस्थानेषुसूर्येस्थितेउत्तराभिमुखेगृहेप्रवेशकर्तुर्वामः सूर्य इत्यर्थः उक्तंचरत्नमालायां नादायात्पंचस्वर्के स्थितेक्रमात् पूर्वाशादिमुखंगेहंविशेद्वामोभवेद्यत इति पूर्णातिथाविति प्राग्वदनेपूर्वाभिमुखेगृहे पूर्णातिथौपंचम्यांदशम्यांपूर्णिमायांवाप्रवेशः नंदादिकेतिथिगणेयाम्यजलोत्तराननेगृहेप्रवेशः शुभः यथादक्षिणाभिमुखेगेहेनंदायांप्रतिपदिषष्ठ्यामेकादश्यांवाप्रवेशः शुभः जलंपश्चिमादिक् तद्दिङ्मुखेगृहेभद्रायांद्वितीयायांसप्तम्यांद्वादश्यांवाप्रवेशः शुभः उत्तराभिमुखेगृहेजयायांतृतीयायामष्टम्यांत्रयोदश्यांवाप्रवेशः शुभः गुरुः नंदायांदक्षिणद्वारंभद्रायांपश्चिमाभिमुखंजयायामुत्तरद्वारंपूर्णायांपूर्वतोविशेत् इति ५ अथगृहप्रवेशकलशवास्तुचक्रं शार्दूलविक्रीडितेनाह वक्त्रेभूरितिगृहप्रवेशसमयइतिसर्वत्रापिसंबध्यते कुंभेकलशाकृतिवास्तौरविभात् सूर्याक्रांतनक्षत्रात् ल्यब्लोपेपंचमीरविभमारभ्य कलशस्यमुखेभूरेकं सूर्याक्रांतनक्षत्रमेवस्थाप्यं तत्फलंगृहस्याग्निदाहः ततः सूर्यभात्कृताः अग्रिमाणिचत्वारिभानिप्राच्यांस्थाप्यानि फलमुद्वसनजनवासशून्यंगृहं स्यात्ततः कृतायमगना तदग्रिमाणिचत्वारिभानिदक्षिणेस्थाप्यानि फलंगृहपतेर्लाभः द्रव्यप्राप्तिः ततः कृताः पश्चिमेतदग्रिमाणिचत्वारिभानिपश्चिमायांस्थाप्यानिफलंगृहपते. श्रीप्राप्तिः ततोवेदाउत्तरे तदग्रिमाणिचत्वारिभानिउत्तरस्यांस्थाप्यानिफलंकलिः लोकैः सहगृहसंबंधिनिरर्थकोवादः झकट. स्यात् ततोयुगमितास्तदग्रिमाणिचत्वारिभानिगर्भेकलशमध्येस्थाप्यानि फलंविनाशोगर्भस्यैवेत्यर्थः ततोरामास्तदग्रिमाणित्रीणिभानिगुदेबु

वामोरविर्मृत्कसुतार्थलाभतोऽर्कैपंचभेप्राग्वदनादिमंदिरे पूर्णातिथौप्राग्वदनेगृहेशुभोनंदादिकेयाम्यजलोत्तरानने ५

धस्याप्यानि फलं स्थैर्यं गृहपतेर्बहुकालं तत्र निवासः नतो ऽनलास्तदग्रिमाणि त्रीणि भानि कंठस्थाप्यानि फलं स्थिरत्वं गृहपतेर्भवेत् एवमभि
हितानि सप्तविंशति भानि स्युः ज्योतिःप्रकाशे पूर्वद पंचक भिश्चि १५ ४४ ४४ ३३ प्रवेशे कलशे के भात् मृतिर्गो विधन श्री स्यादुरःसु कुःस्थिरतास्त्वमिति अ
कलशन के शुभफलस्थान पतो सत्येव विहितनक्षत्राणां परिग्रहो युक्तस्तत्रापि यदि अमुखे प्रवेशो विधित्सितस्तदा हि अमुखनक्षत्रपरिग्रह यथा पूर्वस्यां प्रवेशे
विधित्सिते रोहिणीमृगो वा प्रात्य दक्षिणमुखगृहप्रवेशे उत्तराफाल्गुनी चित्रे वा पश्चिमाभिमुखे अनुराधोत्तराषाढे एव उत्तराभिमुखे उत्तराभाद्रपदा रेवती प्रा
त्येरतिनिष्कर्षोर्थः अत एवोक्तं वसिष्ठेन यदि द्वारं मंदिरं तादृगृक्षैरुक्तर्क्षैः स्यात्सुप्रवेशो नसर्वैरिति तादृगृक्षैरिति वानयो सामानाधिकरण्येनान्वयः।

वक्त्रे भूरविभात्प्रवेशसमये कुंभोग्निदाहः कृता प्राच्यामुद्वसनं कृतायमगता लाभः कृताः पश्चिमे श्रीर्वेदाः कलिरुत्तरे युग
मिता गर्भे विनाशो गुदे रामाः स्थैर्यमतः स्थिरत्वमनला कंठे भवेत्सर्वदा ६ नवास्येतु नकारः कर्तव्यः स्यात् अत एव भर्कानिलाद्यदि द
स्त्रविष्णुक्र्क्षे प्रविशन्नवमंदिरं यत् अद्वयया ततर हज मेति शोपे धिष्ण्येषु नमृत्युर्दस्यादिति निषेधोप्युपपन्नो भवति ६ अथ गृहप्रकरणप्रवेशोप
हार सूचयन्प्रवेशोत्तरकालीनकर्तव्यविधिमुपजातिकयाह एवं सुलग्न इति एवं प्रागुक्तप्रकारेण विनादिनु सुलग्ने शोभनगुणयुते स्थिरराश्यादिके राजा
वितानपुष्पश्रुतिघोषयुक्त वितानानि चंद्रवस्त्र मंडपा पुष्पाणि स्वकालतजानि माल्यादीनि श्रुतिघोषो वेदध्वनिश्चैतैर्युक्तं उपलक्षणत्वात्तोरणाद्य
क्रमागन्यवस्तु सहितमेतादृशस्त्वसत्ताकं गृहं प्रविश्य पश्चात् शिल्पज्ञान् गृहोत्थापकान् स्थपतीन्वर्द्धक्यादीन् दैवज्ञान् ज्योतिर्विदः विधिज्ञान् वास्तुपूजा
भूतबलिगृहप्रवेशविधिज्ञान् पुरोहितप्रभृतीन् पौरान् नागरिकान् पंडितदीनानाथाधकृपणांश्च भूमिहिरण्यवस्त्रैर्यथाशक्त्या व्यसैः समस्तैर्वा उप

क्षणत्वादश्वादिभिर्वा अर्चयेत् पूजयेत् अत्र विशेषमाह वसिष्ठः यद्वास्तुपूजारहितं त्वदत्तबलितनाच्छन्नगृहं विरूपम् कपाटहीनं न विशेद्यतस्त-
त्सर्वाः पदामालयमेव तत्स्यादिति तस्मात्सकर्षोट मुपरिष्टात् छादितं कृत्वा वास्तुपूजादत्तबलिमेव गृहं प्रविशेत् प्रवेशोत्तरविधिमाह श्रीपतिः ततो नृपो
विप्रसुहृत्पुरोधस शिल्पज्ञभूगोलविदश्चलिंगिनः धनैश्वरत्नैः पशुभिः समर्चयन्सदांधदीनान्सुरवासिनस्तथेति ७ इति श्रीमुहूर्तचिं० गृहप्र
वेशप्रकरणसमाप्तम् ७ अथ ग्रंथसमाप्तौ पितामहवर्णनं शार्दूलविक्रीडितेनाह असीदिति धर्मपुरे नर्मदातीरग्रामविशेषे प्रसिद्धः चिंतामणि-
रासीत् किंभूते धर्मपुरे षडंगानि शिक्षादीनि तानि विद्यन्ते यस्य एतादृशो यो निगमो वेदस्तदध्येतारो ये द्विजा ब्राह्मणादयस्तैर्मंडिते भूषिते कीदृशः
चिंतामणिः ज्योतिर्वित्तिलक इव तिलक ज्योतिर्विच्छ्रेष्ठ इत्यर्थः पुनः कीदृशः फणींद्रः शेषनागः तद्रचिते भाष्ये महाभाष्ये कृतोऽतिश्रमोऽभ्यासो-

एवं सलग्ने स्वगृहं प्रविश्य वितानपुष्पश्रुतिघोषयुक्तम् शिल्पज्ञदैवज्ञविधिज्ञपौरान् राजाऽर्चयेद्भूमिहिरण्यवस्त्रैः ७ इति
श्रीदैवज्ञ० मुहूर्तचिंतामणौ० त्रयोदशं गृहप्रवेशप्रकरणं समाप्तम् १३ ७ येन पुनः कीदृशश्चिंतामणिः तज्ज्ञातकसंहिताग-

णितकृत् ताभि तानि स्वल्पबृहदादिभेदेनानेकविधजातकानि जातकशास्त्राणि संहिताः संहिताशास्त्राणि करोति तादृशः गणितानि गणितशा
स्त्राणि करोति तादृशः पुनः कीदृश महाभूभुजा मान्यः पूज्यः पुनः कीदृशः तर्कालंकृतिवेदवाक्यविलसद्बुद्धिः तर्को न्यायशास्त्रं अलंकृतिः अलं-
कारशास्त्रम् वेदवाक्यं वेदवाक्यविचारप्रतिपादकोयं थो मीमांसाशास्त्रं वेदांतशास्त्रं च तेषु विलसतीति विलासयुक्ता बुद्धिर्यस्य सः ८ अथ क्रम
प्राप्ततातवर्णनं तेनैव वृत्तेनाह ज्योतिर्विदिति तत्सूनुस्तस्य चिंतामणिदैवज्ञस्य सूनुः पुत्रोऽनंत इति नाम्ना प्रथां ख्यातिमधिगतः प्राप्त आसीत् की

दृशा ज्योतिर्विद्गणवंदिताध्रिकमल ज्योतिर्विदागणेनसमूहेनवंदितचरणकमलं यस्यसः पुन कीदृशा भूमडले हस्करइवअध्यापन-ध्वराभकाशकइत्यर्थ पुन कीदृशा कृतीकुशल ग्रंथकरणसमर्थइतिशेष. ग्रंथकर्तृत्वमेवोत्तरार्द्धेनप्रकाशयति योरम्याभितिजनपद्धतिं जातकपद्धतिदुष्टाशयध्वंसिनींदुष्टा जन्मपद्धतिमार्गसंभदायानभिज्ञास्तेषामाशयमभिप्रायंध्वंसयति इतिदुष्टाशयध्वंसिनीतामकरोत् तथा उत्तमप्रश्नपक्षार्थपक्षप्रतिपादकेकाम धेनुगणितेग्रंथविशेषेटीकांचसतांप्रीतये कार्षीत् कृतवानित्यर्थं १ अथस्वनामकथनपूर्वकं

आसीद्धर्मपुरेषडंगनिगमाध्येतृद्विजैर्मंडितेज्योतिर्वित्तिलक फणींद्ररचितेभाष्येकृतातिश्रम तत्तज्ज्ञातकसंहितागणि तक्रुन्मान्यामहाभूभुजातकालंकृतिनंदवाक्यविलसद्बुद्धि सचिंतामणि ८ ज्योतिर्विद्गणवंदिताध्रिकमलस्तत्सूनुराशीत्कृ तीनाम्नानंतइतिप्रथामधिगतोभूमडलाहस्कर योरम्याजनपद्धतिसमकरोदुष्टाशयध्वंसिनींटीकांचोत्तमकामधेनुगणितेः कार्षीत्सतांप्रीतये ९

मथसमाप्तिपृथ्वी छंदसाह तदात्मजइति तस्यानंतस्यात्मनोरामाभिधोगिरीशनगरेवाराणस्यांमुहूर्तचिंता मणिमुहूर्तचिंतामणिनामधेयंग्रंथंभुजभुजेषुचंद्रे १५ २२ मितेशके द्वाविंशत्यधिकपंचदशशतमितेशकेविभिरमात् आकार्षीत् शेषस्य

ष्टम् १० इतिश्रीदैवज्ञानंतसुतदैवज्ञरामविरचितायांस्वकृतमुहूर्तचिंतामणिटीकायांप्रमिताक्षरायांत्रयोदशंगृहप्रवेशप्रकरणंसमा

तदात्मजउदारधीविबुधनीलकंठानुजोगणेशपदपंकजंहृदिनिधायरामाभिधः गिरीशनगरेवरेभुजभुजेषुचंद्रै१५२२र्मि तेशकेविनिरमादिमंखलुमुहूर्तचिंतामणिम् १० ॐ इतिश्रीदैवज्ञरामविरचितमुहूर्तचिंतामणिः समाप्तः॥ ॥श्रीशंकरार्पणमस्तु ॐ शुभंभवतु श्रीगजाननप्रसन्नोस्तु श्रीरस्तु ॐ ॐ ॐ ॐ ॐ

प्तम् १२ ॐ श्रीगजाननार्पणमस्तु श्रीसांबसदाशिवार्पणमस्तु श्रीरस्तु शुभंभवतु श्रीकृष्णार्पणमस्तु ॐ ॐ
समाप्तोऽयंग्रंथः ॐ ॐ ॐ ॐ ॐ ॐ

(तारीख१५माहेएप्रीलसन१८८४)

हें पुस्तक मुंबईत बापूसदाशिवशेट शेट्येहेगिष्टे श्रीवर्धनकर यांणीं आपले शिलाछापखान्यांत छापिलें, शके१८०६ तारणनामसंवत्सरे

